स एषः स्वर्गो दुरारोहः । तथाम्नात मिहापि— "स्वर्गो वैलोको दूरोणम्"–इति ( ४. २. ६. ) । यागादिसाधन मन्तरा न कोऽपि तत्र गन्तुं शक्नोतीति यत इति भावः । आम्नायते चैतत्— "स्वर्ग एव तल्लोक यजमानं गमयति"–इति ( ४. १. ४. ) । एवञ्च स्वर्जिगमिषूणां घोरलोकाद्यन्यतमे स्वर्गे प्रवेशसामर्थ्योपपादन मेवाग्निष्टोमादिफलम् , तदुपदेश एवैतस्य प्रयोजनं सिद्ध मिति शम् ॥

---

अथैतदैतरेयालोचन मुपसंहरन्तोऽपि किञ्चिद्वदामः ।—

ऐतरेय मालोचयितुं प्रवृत्तैरस्माभिः प्रसङ्गतोऽपरेऽपि बहवो वैदिकविषयाः समालोचिताः, किन्तु "तेन इत्तरिते तेषां प्रामाण्यं विप्रकृष्टतः"–इति मीमांसाभाष्यवचनतो वेदार्थाविरुद्धानां कृच्छ्र-प्रमाणानां पुराणादिवचनाना मपीह बहुत्र स्वमतपोषणायायोल्लेखः कृतः , सत्यानुरोधतोऽद्यतनसमाजविरुद्धा अप्यत्र लिखिताः स्युः केचन, मानुषप्रकृतिभ्रमविजृम्भिता अवश्यम्भाविनोऽपि भावाः सम्भवाः स्युस्तत्र केचन । तदेवमादिषु किं करणीय मासीदस्माद्दृशाना मल्पमतीना मध्ययनचिन्तालोडितशिर्षेत्राना मिति 'विद्वांसो वै देवा.'–'सत्यसंहिता वै देवाः'–इत्यादिश्रुत्यर्थानुगता देवा एव विचारयन्तु, यतस्त एवात्र नः शरण मिति ।

अथेहालोचितेभ्योऽन्येऽपि सन्ति बहवः सत्यसिद्धान्ताः , तेष्वेते त्रयो नून मधिगन्तव्या वेदसत्यार्थजिज्ञासुभिस्तत्रैष प्रथम.—

वेदे यथा लेट्लकारस्य प्रयोगो न तु व्यत्ययविशेषः , तथैव अतीतानागतवर्त्तमानकालबोधका लङ्लुङ्लिटः प्रत्ययाः भवन्ति छान्दसाः ; न च ते व्यत्ययत्वेन स्वीकार्य्या. । तथा च यत्र यत्र लङ्लुङ्लिटा मन्यतमस्य प्रयोगः श्रुतः , तत्र सर्वत्रैव